ग्रहायास्तु ऋणत्रयापाकरणानंतरमेवापवर्गाय भवत्वित्यर्थः। यर्हि यतो मायया परिच्छिन्न इव लसन्त्या तुलस्या युक्तस्त्वं विलक्षितोऽसि एवंभूतस्य तव दर्शनं यतो भुक्तिमुक्तिप्रदमित्यर्थः ॥२०॥ तं त्वा त्वां भुक्तिमुक्तिप्रदं नमामि । मुक्तिदत्वे हेतुः । अनुभूत्या ज्ञानेनोपरतः क्रियार्थः कर्मफलभोगो यस्मिन् । भोगदत्वे हेतुः । स्वमायया आवर्तितं लोकतंत्रं विश्वोपकरणं येन अतः सकामैर्निष्कामैश्च नमनीयं पादसरोजं यस्य तम् । तत्राल्पीयसि सकामे पुंसि भजने वा कामान्वर्षतीति तथा तम्॥२१॥अमृतेन सुखकरेण प्रेमस्मिताभ्यामीक्षणेन विभ्रमंती भ्रूर्यस्य॥२२॥ चैत्त्यं हार्दं भावं मे मया समयोजि संघटितम् । यदर्थमेवाहं

तं त्वाऽनुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम् ॥ नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥
ऋषिरुवाच[1] ॥ इत्यव्यलीकं प्रणतोऽब्जनाभस्तमाबभाषे वचसाऽमृतेन ॥ सुपर्णपक्षोपरिरोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥२२॥ श्रीभगवानुवाच ॥ विदित्वा तव चैत्त्यं मे पुरैव समयोजि तत् ॥ यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥२३॥ न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम् ॥ भवद्विधेष्वतितरां मयि संगृभितात्मनाम् ॥ २४ ॥प्रजापतिसुतः सम्राड् मनुर्विख्यातमङ्गलः ॥ ब्रह्मावर्तं योऽधिवसञ्छास्ति सप्तार्णवां महीम् ॥ २५ ॥ स चेह विप्र राजर्षिर्महिष्या शतरूपया ॥ आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥ आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम् ॥ मृगयन्तीं पतिं दास्यत्यऽनुरूपाय ते प्रभो ॥२७॥ समाहितं ते हृदयं यत्रेमान्परिवत्सरान् ॥ सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति ॥ २८ ॥ या त आत्मभृतं वीर्यं नवधा प्रसविष्यति॥ वीर्ये त्वदीये ऋषय आधास्यन्त्यऽञ्जसाऽऽत्मनः ॥ २९ ॥

समर्चितस्तत् ॥ २३ ॥ मयि संगृभितः[2] संगृहीत एकाग्रीकृत आत्मा चित्तं यैस्तेषां यन्मदर्हणम् । त्वादृशेष्वतितरां सर्वथा मृषा निष्फलं न स्यात् ॥ २४ ॥ विख्यातं मंगलमभ्युदयः सदाचारादिलक्षणं यस्य ॥ २५ ॥ हे विप्र महिष्या सह ॥ २६ ॥ २७ ॥ यत्र यस्यां भार्यायाम् । समाहितमभिसंधानेन स्थितम् । नृपवधू राजकन्या ॥ २८ ॥ ते वीर्यमात्मनि भृतं धृतं या प्रसविष्यति सा भजिष्यति वीर्ये वीर्यप्रसूतासु कन्यासु अंजसा आत्मनः पुत्रानाधास्यंति ॥ २९ ॥

१ ऋषिर्मैत्रेयः । २ छांदसमेतत् ‘ हृग्रहोर्भश्छन्दसि ’ इति भकारविधानात् ह्रस्वत्वेन च ।

निदेशमाज्ञाम् । उशत्तमः शुद्धसत्त्वः । तीर्थं पात्रं तेन दानं लक्ष्यते । मयि समर्पितसर्वकर्मफल इत्यर्थः ॥ ३० ॥ गार्हस्थ्येन दयां कृत्वा संन्यासेनाभयं दत्त्वा मय्यात्मानं जगच्च सहैकीभूतं द्रक्ष्यसि ॥ ३१ ॥ त्वद्वीर्येण सह देवहूत्यामवतीर्येति शेषः ॥ ३२ ॥ प्रत्यग्भूतेष्वक्षेषु जायते आविर्भवतीति प्रत्यगक्षजः सरस्वत्या नद्या परिश्रितात्परिवेष्टितात् ॥ ३३ ॥ अशेषैस्तपोमंत्रादिसिद्धेश्वरैराभिष्टुतः सिद्धमार्गो वैकुंठमार्गो यस्य । यद्वा । अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत इति सिद्धमार्गश्च स ययौ । पत्ररथेंद्रो गरुडस्तस्य पक्षैरुदीर्णमभिव्यक्तं सामाकर्णयन् । "बृहद्रथंतरे पक्षौ" इति श्रुतेः । उच्चारितं स्तोमं च सामाधार-

त्वं च सम्यगनुष्ठाय निदेशं[2] म उशत्तमः[1] ॥ मयि तीर्थीकृताशेषक्रियाऽर्थो मां प्रपत्स्यसे ॥ ३० ॥ कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान् ॥ मय्यात्मानं सह जगद्द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥ सहाऽहं स्वांशकलया त्वद्वीर्येण महामुने ॥ तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम्[3] ॥ ३२॥ मैत्रेय उवाच ॥ एवं तमनुभाष्याऽथ भगवान्प्रत्यगक्षजः ॥ जगाम बिन्दुसरसः[4] सरस्वत्या परिश्रितात् ॥ ३३ ॥ निरीक्षितस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ॥ आकर्णयन्पत्ररथेन्द्रपक्षैरुच्चारितं स्तोममुदीर्णसाम ॥ ३४ ॥ अथ संप्रस्थिते शुक्ले कर्दमो भगवानृषिः ॥ आस्ते स्म बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥ मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ॥ आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम् ॥ ३६ ॥ तस्मिन्सुधन्वन्नहनि भगवान्यत्समादिशत् ॥ उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत् ॥ ३७ ॥ यस्मिन्भगवतो नेत्रान्न्यपतन्नश्रुबिन्दवः ॥ कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥

भूतानामृचां समुदायं शृण्वन् । " स्तोम आत्मा " इति श्रुतेः । समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य साम्न इति ॥ ३४ ॥ तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ॥ ३५ ॥ शातकौंभाः सौवर्णाः परिकरा यस्मिंस्तं रथमास्थाय दुहितरं चारोप्य वरान्वेषणार्थं पर्यटन् ॥ ३६ ॥ हे सुधन्वन्विदुर यदहः ॥ ३७ ॥ तत्प्रवेशमात्रेण परमानंदं प्राप्त इति दर्शयितुमाश्रमं वर्णयति । यस्मिन्नित्यादिभिः सप्तभिः श्लोकैः । प्रपन्ने कर्दमे ॥ ३८ ॥

---

१ उशत्तम ऋणत्रयाद्विनिर्मुक्तः बा० बो० । उशत्तर इति वा पाठः निर्मलतरः । २ 'निदेशं मुनिसत्तम' इति पाठान्तरम् । ३ तत्त्वानां प्रकृतिपुरुषेश्वराणां स्वरूपविवेचनीं संहितां सांख्यशास्त्रमित्यर्थः । प्रणेष्ये कथयिष्यामि करिष्ये वा । ४ बिन्दुसरस्तीरस्थितात् आश्रमाज्जगाम ।

शिवमारोग्यममृतवत्स्वादु जलं यस्मिन् ॥ ३९ ॥ कूजंतः पुण्या मृगा द्विजाश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैर्युक्तम् ॥ ४० ॥ घुष्टं नादितम् । मत्तभ्रमराणां विभ्रमो विनोदो यस्मिन् । मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन्। आह्वयंतो मिथो मत्ताः कोकिला यस्मिन् ॥ ४१ ॥ कदंबादिभिर्वृक्षैरलंकृतम् ॥ ४२ ॥ कारंडवादिभिः पक्षिभिर्वल्गु यथा तथा कूजितम् ॥ ४३ ॥ हरिणादिभिर्वृतम् । तत्र क्रोडः सूकरः श्वाविच्छल्लकः मर्को मर्कटः तद्विशेषा गोपुच्छाः हरिर्वानरः सिंहो वा नाभिः कस्तूरीमृगः ॥४४॥ हुतो हुताशनो ब्रह्मचारियोग्यो येन ॥४५॥ उग्रा युक् योगो यस्य तेन वपुषा विद्योतमानं

तद्वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम् ॥ पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥ पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ॥ सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियाऽन्वितम् ॥४०॥ मत्तद्विजगणैर्घुष्टं मत्तभ्रमरविभ्रमम् ॥ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥ कदम्बचम्पकाशोककरञ्जबकुलासनैः ॥ कुन्दमन्दारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥ कारण्डवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः ॥ सारसैश्चक्रवाकैश्च चकोरैर्वल्गुकूजितम् ॥ ४३ ॥ तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः॥ गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥४४॥ प्रविश्य तत्तीर्थवरमादिराजः सहात्मजः ॥ ददर्श मुनिमासीनं तस्मिन्हुतहुताशनम् ॥ ४५ ॥ विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ॥ नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात् ॥ तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ ४६ ॥ प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ॥ उपसंसृत्य मलिनं यथाऽर्हणमसंस्कृतम् ॥ ४७ ॥ अथोटजमुपायातं नृदेवं प्रणतं पुरः ॥ सपर्यया प्रत्यगृह्णात्प्रतिनन्द्यानुरूपया ॥ ४८ ॥ गृहीतार्हणमासीनं संयतं[1] प्रीणयन्मुनिः ॥ स्मरन्भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥ नूनं चङ्क्रमणं देव सतां संरक्षणाय ते ॥ वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥

तस्य भगवता व्याहृतं भाषणमेवामृतकला अमृतमयस्य चंद्रस्य कला तन्मयं पीयूषं तस्य श्रवणेन च नातिक्षामं तपसा कृशं संतमप्यकृशम्[2] ॥४६॥ प्रांशुमुन्नतम् उपसंसृत्य समीपं गत्वा मलिनं ददर्शेति पूर्वेव क्रिया अर्ह्यते अनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्णिक्तं यथा मलिनं दृश्यते तद्वत् ॥ ४७ ॥ उटजं पर्णशालां प्राप्तं पुरः पादसमीपे प्रणतमाशीर्भिरभिनंद्य सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥ ४८ ॥ ४९ ॥ ते चंक्रमणं पर्यटनम् । हि यस्मात् ॥ ५० ॥

१ संयतं स्वस्थचित्तम् । २ भगवत्कृतावलोकनसंभाषणजनितसुखेनेत्यर्थः ।

मनुस्थं विष्णुं प्रणमति य इति । स्थाने तत्तत्कार्यावसरे । शुक्लाय विष्णवे ॥ ५१ ॥ न यदेति पंचानामयमर्थः । यद्यपि धर्मरक्षार्थं सर्वतः पर्यटतस्तव प्रसं-
गादप्यागमनं भवति तथापि विशेषकार्यं चेदस्ति तत्कथ्यतामिति जैत्रं जयप्रदं मणिगणा अर्पिता यस्मिंस्तं रथमारुह्य त्वं यदा भुवो मंडलं न पर्यटसि तदा
सेतवो भिद्येरन्निति त्रयाणामन्वयः । विस्फूर्जन्नादं कुर्वच्चंडं कोदंडं धनुर्यस्य ॥ ५२ ॥ स्वसैन्यस्य चरणैः क्षुण्णं संघट्टितम् ॥ ५३ ॥ वर्णाश्रमाणां निबंधनं
यैः । बत अहो ॥ ५४ ॥ निरंकुशैर्नृभिर्निमित्तभूतैः शयाने निश्चिन्ते ॥ ५५॥ निर्व्यलीकेन सहर्षेण प्रतिपद्यामहे स्वीकुर्महे ॥५६ ॥ इति श्रीमद्भागवते तृती-

योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ॥ रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥ न यदा रथमास्थाय जैत्रं
मणिगणार्पितम् ॥ विस्फूर्जच्चण्डकोदण्डो रथेन त्रासयन्नघान् ॥ ५२ ॥ स्वसैन्यचरणक्षुण्णं वेपयन्मण्डलं भुवः ॥ विकर्षन्बृहतीं
सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥ तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः ॥ भगवद्रचिता राजन् भिद्येरन् बत दस्युभिः ॥ ५४ ॥
अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ॥ शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥ अथापि पृच्छे त्वां वीर यदर्थं
त्वमिहागतः ॥ तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥ इति श्रीभा० तृतीय० स्वपुत्रीस्वायंभुवमनुकर्दमसमागमवर्णनं
नाम एकविंशतितमोऽध्यायः ॥ २१ ॥ मैत्रेय उवाच ॥ एवमाविष्कृताशेषगुणकर्मोदयो मुनिम् ॥ सव्रीड इव तं सम्राडुपारतमुवाच
ह ॥ १ ॥ मनुरुवाच ॥ ब्रह्माऽसृजत् स्वमुखतो युष्मानात्मपरीप्सया ॥ छन्दोमयस्तपोविद्यायोगयुक्तानलम्पटान् ॥ २ ॥

यस्कंधे टीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥ द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ॥ मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ १ ॥ एवमाविष्कृतोऽभि-
ष्टुतोऽशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य स सम्राण्मनुः सव्रीड इव स्वकीर्तिश्रवणात् प्रत्याख्यानशंकया वा तं मुनिमुवाच उपारतं निवृत्तिनिर-
तम् ॥ १ ॥ मदीया कन्या त्वया परिणेयेति विज्ञापयिष्यन्युष्मदस्मत्संबंधस्तावदीश्वरेण पूर्वमेव घटित इत्याह । ब्रह्मेति सार्द्धाभ्याम् । आत्मनः परीप्सया-
पर्याप्तुमिच्छया छंदोमयस्यात्मनः पर्याप्तिः पालनं वेदप्रवर्तनं तस्येच्छया युष्मान्ब्राह्मणान् ॥ २ ॥

---

१ शयाने त्यक्तपर्यटने इत्यर्थः । २ रथेन रथघोषेणेत्यर्थः । अघान्दुष्कृतिनः त्रासयन्नुद्वेजयन् । ३ दस्युभिर्हिंस्रैः पुरुषैः ।

तत्राणाय ब्राह्मणपालनाय ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः ॥ ३ ॥ एवं स देव एव रक्षति स्म । कोऽसौ यः सदसदात्मकः सर्वात्मकः तथाऽप्यव्ययो निर्विकारः ॥ ४ ॥ विज्ञापयितुमेव तद्दर्शनादिकमभिनंदति । तवेति त्रिभिः ॥५॥ अकृतात्मनामवशीकृतचित्तानाम् ॥६॥ अनुग्रहोऽनुशासनादिरूप एव । उशती-रुशत्यः ॥ ७ ॥ विज्ञापयति । स भवानिति सप्तभिः । दुहितुः स्नेहेन परिक्लिष्ट आत्मा यस्य श्रावितं विज्ञापनम् ॥ ८ ॥ प्रियव्रतोत्तानपदो स्वसेति पुत्रिकाक-

तत्राणायासृजच्चास्मान् दोःसहस्रात सहस्रपात् ॥ हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥ ३ ॥ अतो ह्यन्योऽन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ॥ रक्षति स्माव्ययो देवः स यः सदसदात्मकः ॥ ४ ॥ तव संदर्शनादेव च्छिन्ना मे सर्वसंशयाः ॥ यत्स्वयं भगवान्प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥ दिष्ट्या मे भगवान्दृष्टो दुर्दर्शो योऽकृतात्मनाम् ॥ दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ६ ॥ दिष्ट्या त्वयाऽनुशिष्टोऽहं कृतश्चानुग्रहो महान् ॥ अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्टोशतीर्गिरः ॥ ७ ॥ स भवान्दुहितृस्नेह-परिक्लिष्टात्मनो मम ॥ श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥८॥ प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ॥ अन्विच्छती पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥ यदा तु भवतः शीलश्रुतरूपवयोगुणान् ॥ अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया ॥ १० ॥ तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपाहृतां मया ॥ सर्वात्मनाऽनुरूपां ते गृहमेधिषु कर्मसु ॥ ११ ॥ उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ॥ अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः ॥ १२ ॥

रणशंका निरस्ता मम सुतेति क्षत्रकन्या तव योग्येति दर्शितम् ॥ ९ ॥ एषा देवहूतिः ॥ १० ॥ प्रतीच्छ स्वीकुरु ॥११॥ उद्यतस्य स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानम् ॥ १२ ॥

१ एवमङ्गाङ्गित्वादुभयमपि तारतम्येन तस्यातिप्रियमित्यर्थः ।२ सर्वसंशयाः किमयं निवृत्तिपर एव प्रवृत्तिपरश्च वा । प्रवृत्तिपरत्वेऽपि अस्मत्प्रार्थनां प्रत्याचक्षीत वा स्वीकुर्याद्वा स्वीकारेऽपि देवहूत्यै रोचेत वा न वेत्यादयः । ३ इतोऽपि गुणान् गृहाणेत्याशयेनाह सर्वात्मनामिति । सर्वात्मना युक्तायुक्तविचारमंतरेण सर्वप्रकारेण वा अनुकूलाम् अनुरूपस्वभावां ग्रहमेधिषु गृहाश्रमयोग्येषु ।

कीनाशं कृपणम् । अवज्ञया परापमानेन ॥ १३ ॥ यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः मे प्रत्तां मया दत्ताम् ॥ १४ ॥ अप्रत्ता चेति मय्येव कृतनिश्चयत्वात्कस्मैचित्प्रतिश्रुता च न भवतीत्यर्थः । आद्यः प्रथमः ततः पूर्वं विवाहाभावात् । मुख्य इति वा ॥ १५ ॥ भूयाद्भवेत् प्रतीतः " गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या " इत्यादिमंत्रो प्रसिद्धः । स्वयांगकांत्यैव श्रियं भूषणादिशोभाम् ॥ १६ ॥ यां विलोक्य न्यपतत् संमोहेन विमूढं व्याकुलं चेतो यस्य क्वणद्भ्यामंघ्रिभ्यां शोभा यस्याः॥१७॥ तां ललनानां ललामं भूषणभूताम् असेवितौ श्रियश्चरणौ यैस्तैरदृष्टाम् द्रष्टुमप्ययोग्याम्। उच्चपदः उत्तान-

य उद्यतमनादृत्य कीनाशमभियाचते ॥ क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥ अहं त्वाऽशृणवं विद्वन्विवाहार्थे समुद्यतम् ॥ अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥ १४ ॥ ऋषिरुवाच ॥ बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा ॥ आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥ कामः स भूयान्नरदेव तस्याः पुत्र्याः समाम्नायविधौ प्रतीतः ॥ क एव ते तनयां नाद्रियेत स्वयैव कान्त्या क्षिपतीमिव श्रियम् ॥१६॥ यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां विक्रीडतीं कन्दुकविह्वलाक्षीम् ॥ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य संमोहविमूढचेताः ॥ १७ ॥ तां प्रार्थयन्तीं ललनाललाममसेवितश्रीचरणैरदृष्टाम् ॥ वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥ अतो भजिष्ये समयेन साध्वीं यावत्तेजो बिभृयादात्मनो मे ॥ अतो धर्मान्पारमहंस्यमुख्याञ्छुक्लप्रोक्तान्बहु मन्येऽविहिंस्रान् ॥ १९ ॥ यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वाऽवतिष्ठते ॥ प्रजापतीनां पतिरेष मह्यं परं प्रणामं भगवाननन्तः ॥ २० ॥

पादस्य अभियातां स्वयं प्राप्ताम् ॥ १८ ॥ भजिष्ये स्वीकरिष्ये यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं संन्यास इति । भाषाबंधः समयः । तमेवाह । यावदात्मनो मम तेजो गर्भं बिभृयात् । यद्वा । ममात्मनो देहाच्च्युतं तेजो वीर्यं बिभृयादिति । अतः परं पारमहंस्यं ज्ञानं तस्मिन्मुख्यान् शुक्लेन विष्णुना साक्षात्प्रकर्षेणोक्तानविहिंस्रान्हिंसारहितान् शमादीन्बहु यथा भवत्येवमनुष्ठेयान्मन्ये ॥ १९ ॥ ननु तव पितुः प्रजापतेराज्ञा सृष्टावेव न संन्यासे तत्राह । यत इति । संस्थास्यते च लयं यास्यति । वावेति एवार्थे । ऋणत्रयापाकरणानंतरं संन्यास एव मादृशानां भगवतोक्त इत्यर्थः ॥ २० ॥

---

१ अनेन सर्वथासौ निर्दोष इत्युक्तम् । २ ' दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि । ' इति मंत्रे च ।

हे उग्रधन्वन् विदुर लुलुभे मुनेर्मुखेन प्रलोभ्यते स्म । यद्वा मुखेन प्रलोभितवान् ॥ २१ ॥ स मनुः अन्वनंतरं महिष्याश्च व्यवसितं निश्चयं ज्ञात्वा ॥ २२ ॥ पारिबर्हान्विवाहकाले प्रदेयान् भूषाः भूषणानि वासांसि परिच्छदान्गृहोपकरणानि च ॥ २३ ॥ प्रत्तां दत्ताम् । सदृक्षाय सदृशाय गता व्यथा चिंता यस्य औत्कंठ्येनोन्मथितः क्षुभित आशयो यस्य॥२४॥ तस्या विरहं सोढुं हे अंब हे वत्से इति ब्रुवन् । संधिरार्षः । शिखाः केशानासिंचत् ॥२५॥२६॥ ऋषिकुलहि-

॥ मैत्रेय उवाच ॥ स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविन्दनाभम् ॥ धियोपगृह्णन्स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥ सोऽनुज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ॥ तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥ शतरूपा महाराज्ञी पारिबर्हान्महाधनान् ॥ दम्पत्योः पर्यदात्प्रीत्या भूषावासःपरिच्छदान् ॥ २३ ॥ प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः ॥ उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥ २४ ॥ अशक्नुवंस्तद्विरहं मुञ्चन्बाष्पकला मुहुः ॥ आसिञ्चदम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥ आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः ॥ प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥२६॥ उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ॥ ऋषीणामुपशान्तानां पश्यन्नाश्रमसंपदः ॥ २७ ॥ तमायान्तमभिप्रेत्य ब्रह्मावर्तात् प्रजापतिम् ॥ गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥ बर्हिष्मती नाम पुरी सर्वसंपत्समन्विता ॥ न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥२९॥ कुशाः काशास्त एवासन् शश्वद्धरितवर्चसः ॥ ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ॥ ३० ॥ कुशकाशमयं बर्हिरास्तीर्य भगवान् मनुः ॥ अयजद्यज्ञपुरुषं लब्ध्वा स्थानं यतो भुवम् ॥ ३१ ॥

तायाः उभयोः सुरोधसोः शोभनतटयोः ॥२७॥ अभिप्रेत्य ज्ञात्वा ब्रह्मावर्तद्देशात्प्रजाः पतिं प्रत्युज्जग्मुः॥२८॥ कोऽसौ ब्रह्मावर्त इत्यपेक्षायामाह । यत्र बर्हिष्मती नाम पुरीति । साऽपि कुत्र । यत्र यज्ञस्य यज्ञवराहस्य रोमाणि न्यपतन्निति यत्रेति सर्वत्र संबध्यते ॥२९॥ बर्हिष्मतीनामनिरुक्तिं ब्रुवन्प्रसंगाद्देशस्य श्रैष्ठ्यमाह द्वाभ्याम् । कुशाः काशाश्चासन् शश्वन्नित्यं हरितं वर्चो वर्णो येषाम् । यज्ञघ्नान् राक्षसादीन् पराभवं नीत्वा यज्ञं विष्णुम् ॥ ३० ॥ यज्ञपुरुषं विष्णुं यत इति

१ हे वत्सेति संधिरार्ष इत्युक्तं यद्वा लोकरीत्या अतिप्रीत्या स्वकन्यायां पुत्रत्वमारोप्य हे वत्सेति संबोधनं ज्ञेयम् । २ गुणगणाढ्यामित्यर्थः । ३ ‘ तस्मै हितम्’ इति हितार्थे ‘ उगवादिभ्यो यत् ’ इत्यनेन गवादित्वाद्यत्प्रत्ययः अत एव टीकायां ‘ ऋषिकुलहितायाः ’ इति ।

यत्रायजत् भुवं स्थानं लब्ध्वेति तृन्प्रत्ययांतम् । लब्धवान्सन्नित्यर्थः । यतो लब्धवांस्तं यज्ञपुरुषमिति वा एतेन स्वर्गादपि भूमिः श्रेष्ठा तत्रापि तत्स्थानं श्रेष्ठमित्युक्तं भवति ॥ ३१ ॥ प्रस्तुतमाह । यां बर्हिष्मतीं नाम पुरीं समावसत् पूर्वं यस्यामुषितस्तस्यां निर्विश्य भवनं प्रविष्टः सन्भोगान्बुभुजे इत्यन्वयः ॥ ३२ ॥ अन्येषां धर्मादीनामविरोधेन प्रत्यूषेषु उषःसु संगीयमाना सत्कीर्तिर्यस्य तथापि स्वयं हरेरेव कथाः शृण्वन्भोगान्बुभुजे ॥ ३३ ॥ योगमायासु ऐच्छिकभोगरचनासु यद्यतः आभ्रंशयितुं आ ईषदपि भ्रंशयितुमभिभवितुम् ॥ ३४ ॥ अतो यातो यामो यस्य पक्वस्यान्नस्य तद्वतसारं भवन्त्यतोऽन्यदपि गतसारं यात-

बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत् ॥ तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ सभार्यः सप्रजः कामान् बुभुजेऽन्याविरोधतः ॥ ३२ ॥ संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ॥ प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन्हरेः कथाः ॥ ३३ ॥ निष्णातं योगमायासु मुनिं स्वायंभुवं मनुम् ॥ यदा भ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥ अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ॥ शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥ स एव स्वान्तरं निन्ये युगानामेकसप्ततिम् ॥ वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥ ३६ ॥ शारीरा मानसा दिव्या वैयासे[1] ये च मानुषाः ॥ भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥ यः पृष्टो मुनिभिः प्राह धर्मान् नानाविधान् शुभान् ॥ नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥ एतत् त आदिराजस्य मनोश्चरितमद्भुतम् ॥ वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥ ३९ ॥ इति श्रीभागवते महापुराणे तृतीयस्कन्धे सपत्निकस्वायंभुवमनोः बर्हिष्मतीं प्रत्यागमनं नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥ मैत्रेय उवाच ॥ पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा ॥ नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥

याममुच्यते । अयातयामा अगतसारा आसन् । स्वांतरं तदीयं मन्वंतरं यापयंति ते यामाः कालावयवाः कुर्वतः स्ववाक्यैरुपनिबध्नतः ॥ ३५ ॥ परिभूतगतित्रयं जाग्रदादि सात्त्विकादि वा येन ॥ ३६ ॥ दिव्यास्त्वांतरिक्षाः मानुषाः शत्रुप्रभावाः भौतिकाः शीतोष्णादिप्रभावाः । वैयासे हे विदुर ॥ ३७ ॥ तस्य ज्ञानातिशयमाह । य इति । नृणां साधारणधर्मान् ॥ ३८ ॥ तस्य यदपत्यं देवहूतिस्तस्योदयं प्रभावम् ॥ ३९ ॥ इति तृतीये टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे ततो योगनिर्मिते सर्वसंपदि ॥ विमाने कामगे चित्रा तयो रतिरुदीर्यते ॥ १ ॥

१ " पर्यासे ये च मानुषाः " इति पाठान्तरम् पर्यासे मानुषत्वेनावस्थानेऽपि । एवं यामानामयातयामत्वं ज्ञेयम् ।

प्रस्थिते गमने कृते सति ॥ १ ॥ २ ॥ दंभं कपटम् । अघं निषिद्धाचरणं तेजीयांसमतितेजस्विनम् ॥ ३ ॥ दैवाद्गरीयसो दैवादपि गुरुतरात् । दैवमप्यन्यथा-कर्तुं समर्थादित्यर्थः ॥ ४ ॥ व्रतचर्यया कर्शितां तत्रापि भूयसा कालेनातिक्षामामित्यर्थः ॥ ५ ॥ सुहृत्प्रियः मदर्थे क्षपयितुं नावेक्षितो न गणितः समुचितः श्लाघ्योऽपि मत्सेवासक्तयोपेक्षित इत्यर्थः ॥ ६ ॥ तपश्च समाधिश्च विद्या च उपासना तासु य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ता भगवत्प्रसादा दिव्य-भोगास्तानेव तेऽवरुद्धांस्त्वयापि वशीकृतान्प्रपश्य ते दिव्यां दृष्टिं वितरामि यया दृष्ट्या द्रक्ष्यसि ॥ ७ ॥ अन्ये पुनर्भोगाः किं न किमपि अतितुच्छा इत्यर्थः ।

विश्रम्भेणात्मशौचेन गौरवेण दमेन च ॥ शुश्रूषया सौहृदेन वाचा मधुरया च भोः ॥ २ ॥ विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् ॥ अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥ स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ॥ दैवाद्गरीयसः पत्युराशासानां महाशिषः ॥ ४ ॥ कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ॥ प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥ ५ ॥ कर्दम उवाच ॥ तुष्टोऽहमद्य तव मानवि मानदायाः शुश्रूषया परमया परया च भक्त्या ॥ यो देहिनामयमतीव सुहृत् स्वदेहो नावेक्षितः समुचितः क्षपितुं मदर्थे ॥६॥ ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ॥ तानेव ते मदनुसेवनयाऽवरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥ अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः किमुरुक्रमस्य ॥ सिद्धाऽसि भुङ्क्ष्व विभवान्निजधर्मदोहान् दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥ ८ ॥ एवं ब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत् ॥ संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडाऽवलोकविलसद्धसिताननाह ॥ ९ ॥

तत्र हेतुः । भगवत उरुक्रमस्य या भ्रूस्तस्या उद्विजृंभो वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथा येषु निजधर्मेण पातिव्रत्येन दुह्यंत इति तथा तान् दुर-धिगान्दुष्प्रापान् नृपा वयमिति या विक्रियास्तत्तद्भोगविकृतयस्ताभिः ॥ ८ ॥ अखिला योगमायाश्च विद्याश्च तत्तदुपासनास्तासु विचक्षणं निपुणमेवं ब्रुवाणं पतिमवेक्ष्य गताधिर्निश्चिंता जाता संप्रश्रयो विनयः प्रणयः प्रेम ताभ्यां विह्वला गद्गदा तया गिरा ईषद्व्रीडासहितो योऽवलोकस्तेन विलसद्विकसितं हसितं जात-हासं चाननं यस्याः सा आह जगाद ॥ ९ ॥

---

१ तत्कार्श्ये तावत् व्रतचर्याहेतुः । अतिक्षामत्वेन व्रतचर्याया दीर्घकालत्वमिति भावः । २ कालभयव्याप्ता इत्यर्थः ।

बतेति हर्षे। द्विजवृष द्विजश्रेष्ठ हे भर्तस्त्वय्येतत्सर्वं राद्धं सिद्धमेव तदहमवैमि जानामि किंतु यस्ते त्वया समयोऽभिहितः स तावद्भूयात् सकृदिति गर्भसंभव-मात्रपर्यंत इत्यर्थः। यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते स्त्रीणां प्रसवो गुणो महान् लाभः। समासपाठे गरीयसि सतीनां यतो गुणविस्तारो भवति। अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं सर्वं भवत्विति भावः ॥ १० ॥ अंगसंगार्थं च प्रथममितिकर्तव्यतां संपादयेत्याह हे ईश तत्रांगसंगे इतिकृत्यं साधनं यथोपदेशं कामशास्त्रानुसारेणोपशिक्ष संजानीहि उपकल्पयेत्यर्थः। येन साधनेनाभ्यंगभोजनपानादिनाऽतीव रंतुमिच्छया कर्शितो दीनश्च ममैष आत्मा

देवहूतिरुवाच ॥ राद्धं बत द्विजवृषैतदमोघयोगमायाऽधिपे त्वयि विभो तदवैमि भर्तः ॥ यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो भूयाद्गरीयसि गुणः प्रसवः सतीनाम् ॥ १० ॥ तत्रेतिकृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिरंसयात्मा ॥ सिध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥ मैत्रेय उवाच ॥ प्रियायाः प्रियमन्विच्छन्कर्दमो योगमास्थितः ॥ विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥१२॥ सर्वकामदुघं[२] दिव्यं सर्वरत्नसमन्वितम् ॥ सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥ दिव्योपकरणोपेतं सर्वकालसुखावहम् ॥ पट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ १४ ॥ स्रग्भिर्विचित्रमाल्याभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः ॥ दुकूल[३]क्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥

देहः सिध्येत रतिसमर्थो भवेत्। कथंभूतायाः। ते त्वयैव कृतः क्षोभितो यो मनोभवस्तेन धर्षितायाः। तत्ततोऽनुरूपं भवनं विचक्ष्व वितर्कय विचारयेति यावत् ॥ ११ ॥ तर्हि तत्क्षणमेव आविरचीकरदाविर्भावयांबभूव ॥ १२ ॥ तदेव विशिनष्टि। सर्वकामदुघमिति नवभिः। सर्वैश्च रत्नादिभिः समन्वितम्। सर्वर्द्धीनां सर्वसंपदां य उपचयस्तस्योदर्क उत्तरोत्तराभिवृद्धिर्यस्मिन् उपस्कृतं शोभितम् ॥ १३ ॥ उपकरणं परिकरः। पट्टिका अल्पविस्तारपट्टवस्त्रविशेषाः पताका विस्तृतास्ताभिः ॥ १४ ॥ विचित्राणि माल्यानि पुष्पाणि यासु मंजु यथा भवत्येवं सिंजंतः कूजंतः षडंघ्रयो यासु ताभिः स्रग्भिः ॥ १५ ॥

---

१ यद्वा सकृदङ्गसंगेन किं महत्फलं स्यादिति तत्राह वरीयसीति। पतिव्रतानां स्त्रीणां गुणोत्तमे पत्यौ सकृदङ्गसंगोऽपि गुणप्रसवः गुणयुक्तं पुत्रं प्रसूते इति गुणवत्पुत्रोत्पत्त्या सफल इति विजयध्वजाचार्याननुसृत्य महेश्वरः। २ सर्वकामान् दोग्धीति सर्वकामदुघं सर्वेषां कामानां पूरकमिति। प्रथमं षष्ठीसमासोऽत्र विज्ञेयः। ३ दुकूलमिति साधारणम्। क्षुमतन्तुनिर्मितं लाक्षासंयोगि क्षौममुच्यते कौशेयं केनाप्यसंयोगिकीटतन्तुविकारं वस्त्रमिति दुकूलक्षौमकौशेयभेदविशेषः।

उपर्युपरि विरचितगृहेषु कशिपुभिः शय्याभिः कांतं कमनीयम् । पर्यंकादिभिश्च कांतम् ॥ १६ ॥ १७ ॥ द्वास्सु द्वारेषु विद्रुमनिर्मिता देहली उदुंबरस्तया भातं शोभितं वज्रखचितकपाटयुक्तम् । इंद्रनीलमयेषु प्रासादाग्रभागेषु ॥ १८ ॥ चक्षुष्मंत इव ये पद्मरागाग्र्यास्तैः । यद्वा । चक्षुष्मदिव कैः पद्मरागाग्र्यैः विचित्रैर्वैतानैर्वितानसमूहैः ॥ १९ ॥ कृत्रिमानपि हंसादीन्स्वान्सजातीयान्मन्यमानैस्तत्र तत्राधिरुह्याधिरुह्य निकूजितम् ॥ २० ॥ विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहम् । संवेश उपभोगस्थानम् । प्रांगणं गृहाद्बहिः अजिरं प्राकाराद्बहिः यथोपजोषं यथासुखमात्मनः स्वस्य मायाविनोऽपि विस्मयजनकमिव

उपर्युपरि विन्यस्तनिलयेषु पृथक्पृथक् ॥ क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥ तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ॥ महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥ द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटवत् ॥ शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ १८ ॥ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः ॥ जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९ ॥ हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ॥ कृत्रिमान्मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥ विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः ॥ यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥ ईदृग्गृहं तत्पश्यन्तीं नातिप्रीतेन चेतसा ॥ सर्वभूताशयाभिज्ञः[1] प्रावोचत्कर्दमः स्वयम् ॥ २२ ॥ निमज्ज्यास्मिन्ह्रदे भीरु विमानमिदमारुह ॥ इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम् ॥ २३ ॥ सा तद्भर्तुः समादाय वचः कुवलयेक्षणा ॥ सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥ अङ्गं च मलपङ्केन संछन्नं शबलस्तनम् ॥ आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥ साऽन्तःसरसि वेश्मस्थाः शतानि दश कन्यकाः ॥ सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः ॥ २६ ॥

॥ २१ ॥ नातिप्रीतेन मलिनदेहत्वात्परिचारिकाभावाच्च ॥ २२ ॥ अस्मिन् ह्रदे बिंदुसरसि आरुहाधिरोह शुक्ले विष्णुना कृतमानं बिंदुनिपातनेन तीर्थं यापकं प्रापकम् ॥ २३ ॥ समादायादृत्य सरजं मलिनम्। वेणीभूताञ्जटिलान् ॥ २४ ॥ शबलौ विवर्णौ स्तनौ यस्मिंस्तत् । सरस्वत्याः शिवानि जलान्याशेरते यस्मिन् । शिवा जलाशया जलचरा यस्मिन्निति वा ॥ २५ ॥ सा तत्र निमग्ना सती विस्मयं ददर्श । तमाह । सांऽतःसरसीति दशभिः । उत्पलगंधयः[2] कमलगंधीः ॥ २६ ॥

१ सर्वप्राणिनामाशयमभिजानातीति हेतुगर्भविशेषणमेतत् । २ उत्पलगंधय इति उत्तरश्लोकस्थस्त्रियः इतिप्रथमान्तस्य विशेषणे द्वितीयांतार्षकरणप्रयासो न ।

तुभ्यं तव कर्मकरीः परिचारिका वयमस्मानाज्ञापयेति स्त्रियः प्रोचुः ॥ २७ ॥ ततश्च स्नानेन स्नानयोग्यतैलादिना ॥ २८ ॥ परार्ध्यान्युत्कृष्टानि वरीयांसि तत्प्रियाणि द्युमंति दीप्तिमंति च पानं पेयम् । अमृतं स्वादु आसवं मादकम् ॥ २९ ॥ आदर्शे स्वमात्मानं ददर्शेति शेषः । आत्मानं विशिनष्टि चतुर्भिः । कृतं स्वस्त्ययनं मंगलं यस्य पुंस्त्वमात्मशब्दसामानाधिकरण्यात् ॥ ३० ॥ विरजमित्यस्य प्रपंचः स्नातमुद्वर्त्य क्षालितम् । कृतं शिरःस्नानमभ्यंगो येन भूषितत्वमेवाह । निष्कं पदकं ग्रीवायां यस्य ॥ ३१ ॥ बहूनि रत्नानि यस्यां तया रुचकेन मंगलद्रव्येण कुंकुमादिना तदुक्तं विश्वप्रकाशे । " रुचकं मंगलद्रव्ये

तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ॥ वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम्॥२७॥स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ॥ दुकूले निर्मले नूत्ने ददुरस्यै च मानद॥२८॥भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च ॥ अन्नं सर्वगुणोपेतं पानं चैवामृतासवम्॥२९॥अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ॥ विरजं कृतस्वस्त्ययनं कन्याभिर्बहु मानितम् ॥३०॥ स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम्॥निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम्॥३१॥श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया॥ हारेण च महार्हेण रुचकेन च भूषितम्॥३२॥सुदता सुभ्रुवा श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा॥पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥ यदा सस्मार ऋषभमृषीणां दयितं पतिम् ॥ तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥३४॥ भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ॥ निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥ स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् ॥ आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥ विद्याधरीसहस्रेण सेव्यमानां सुवाससम् ॥ जातभावो विमानं तदारोहयदमित्रहन् ॥ ३७ ॥

ग्रीवाभरणदंतयोः । " इति ॥३२॥ सुदता सुभ्रुवा चक्षुषेति च जातावेकवचनानि एतैर्लसच्छोभमानं मुखं यस्य कथंभूतेन चक्षुषा श्लक्ष्णो मनोहरः स्निग्धोऽपांगो नेत्रप्रांतो यस्य पद्मकोशेन स्पर्धत इति पद्मकोशस्पृत्तेन ॥ ३३ ॥ दृष्ट्वा च यदा पतिं सस्मार तदा यत्रासौ तत्रैव स्वयमप्यास्ते ॥ ३४ ॥ आत्मानं निशाम्य दृष्ट्वा तां च तस्य योगगतिं योगप्रभावं दृष्ट्वा संशयं किमिदमिति विस्मयम् ॥ ३५ ॥ स मुनिर्विवाहात्प्राग्यदात्मनो रूपं तदेव पुनर्बिभ्रतीम् । संवीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः पाठांतरे तु रूपविशेषणम्॥३६॥शोभने वाससी यस्याः । जातो भावः प्रेम यस्य । हे अमित्रहन् जितकाम ॥ ३७ ॥

१ रुचकेन वृत्ताकारेण कण्ठाभरणेन इ०वि०। अग्रतेनकोशेन स्पष्टमेतत्। २ कर्मकर्य इति वक्तव्ये कर्मकरीरिति जस्यार्षं रूपम्। ३ माद्दुर्भुतव्यवायलीलारम्भः इत्यर्थः ।

तस्मिन्विमाने मुनिर्बभ्राजे । न लुप्तो महिमा स्वातंत्र्यं यस्य उपचीर्णं शुश्रूषितं वपुर्यस्य विकसितकुमुद्गणवानपीच्योऽतिसुंदरः पूर्णचंद्र इव मुनिर्नभ इव विमानं ताराः इव ताः स्त्रियः कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ तेन विमानेन अष्टलोकपालानां विहारो यस्मिन्कुलाचलेंद्रे मेरौ तस्य द्रोणीषु दरीषु अनंगस्य सखा यो मारुतः शीतसुगंधमंदानिलस्तेन सौभगं सौंदर्यं यासु सिद्धैर्नुतः स्तुतः सन् द्युधुनिर्गंगा तस्याः पातेन शिवः स्वनो यासु तासु रेमे । ललनावरूथी स्त्रीरत्नसमूहवान् ॥ ३९ ॥ वैश्रंभकादिषु देवोद्यानेषु मानसे च सरसि रतः प्रीतः सन् ॥ ४० ॥ अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥ उद्दामचेतसां धीराणाम् ।

तस्मिन्नलुप्तमहिमा प्रिययाऽनुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने॥ बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभस्थः॥३८॥तेनाष्टलोकपविहारकुलाचलेन्द्रद्रोणीष्वनङ्गसखमारुतसौभगासु॥सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी॥३९॥वैश्रम्भके सुरसने नन्दने पुष्पभद्रके॥मानसे चैत्ररथ्ये च स रेमे रामया[1] रतः॥४०॥भ्राजिष्णुना विमानेन कामगेन महीयसा॥वैमानिकानत्यशेत चरँल्लोकान्यथाऽनिलः[2]॥४१॥ किं दुरापादनं तेषां पुंसामुद्दामचेतसाम्॥यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः॥४२॥प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया ॥ बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत॥४३॥विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् ॥ रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत्॥४४॥तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ॥ नचाबुध्यत तं कालं[3] पत्याऽपीच्येन संगता ॥ ४५ ॥ एवं योगानुभावेन दम्पत्यो रममाणयोः ॥ शतं व्यतीयुः शरदः कामलालसयोर्मनाक्॥ ४६ ॥ तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित् ॥ नोधा विधाय रूपं स्वं सर्वसंकल्पविद्विभुः ॥४७॥

व्यसनं संसारस्तस्यात्ययो यस्मात् ॥ ४२ ॥ प्रेक्षयित्वा दर्शयित्वा गोलं मंडलम् । स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावंतम् । बहून्याश्चर्याणि यस्मिंस्तम् ॥ ४३ ॥ नवधा विभज्य नवप्रभेदमात्मानं कृत्वा ॥ ४४ ॥ ४५ ॥ शरदः संवत्सराः मनागीषदिव व्यतीयुः ॥ ४६ ॥ आत्मना स्वदेहार्धरूपेणातिप्रीत्या भावयन् तथा सति सदपत्यं भवेदिति नोधा नवधा सर्वसंकल्पविदिति तस्या बह्वपत्यसंकल्पं जानन्नित्यर्थः । विभुस्तथा कर्तुं समर्थश्च आत्मविदिति



---

१ रामया देवहूत्या सह रेमे अनेन श्लोकद्वयेन विमानस्य कामगत्वं विवृतम् । २ विमानेन चरंति इति वैमानिकास्तान्गन्धर्वानित्यर्थः । ठगधिकारस्थ 'चरती' ति सूत्रेण तृतीयान्तात् ठगत्र ज्ञेयः । " ठस्येकः " इत्यनेन तस्य इकादेशश्च । ३ तमनेकवर्षसमूहात्मकं कालं नाबुध्यत एतावान्कालो गत इति न ज्ञातवती ।

च तस्यामनासक्तत्वात्स्त्रियो जाता इति भावः । "पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।" इति स्मृतेः ॥४७॥ अतोऽनंतरमेव सद्य एकस्मिन्नेवाहनि चारूणि सर्वाण्यंगानि यासाम् ॥ ४८ ॥ प्रव्रजिष्यंतमालक्ष्य वितर्क्य स्मयमाना बहिरंतस्तु विक्लवेन व्याकुलेन विदूयता संतप्यमानेन हृदा उवाचेत्युत्तरेणान्वयः ॥ ४९ ॥ नखा एव मणयस्तैः श्रीः शोभा यस्य तेन पदा भुवं लिखंतीति दुरंतचिंतालक्षणम् ॥ ५० ॥ उपोवाह संपादितवान् । अभयमिति भाविनो दैन्यात्संसाराच्च यद्भयं तन्निवर्तयेत्यर्थः ॥ ५१ ॥ तत्र दैन्यं निवेदयति । तुभ्यं तव दुहितृभिः स्वयमेवात्मनः समा योग्याः पतयो विमृग्या इति दैन्यं प्राप्तम् ।

अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ॥ सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥४८॥ पतिं सा प्रव्रजिष्यन्तं तदालक्ष्योशती सती ॥ स्मयमाना विक्लवेन हृदयेन विदूयता॥४९॥लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया ॥ उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥ देवहूतिरुवाच॥सर्वं तद्भगवान् मह्यमुपोवाह प्रतिश्रुतम् ॥ अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥ ब्रह्मन् दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ॥ कश्चित् स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥५२॥ एतावताऽलं कालेन व्यतिक्रान्तेन मे प्रभो ॥ इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥ इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः ॥ अजानन्त्या परं भावं तथाऽप्यस्त्वभयाय मे ॥५४॥ सङ्गो यः संसृतेर्हेतुरसत्सु विहितो धिया॥ स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥ नेह यत्कर्म धर्माय न विरागाय कल्पते ॥ न तीर्थपादसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥

संसारभयमुररीकृत्याह । कश्चिदिति । विशोकाय ज्ञानोपदेशाय स्त्रीभिर्ऋणानपाकरणात्कंचित्कालं त्वदवस्थानेन ब्रह्मवित्पुत्रः कश्चित्किं स्यादित्यर्थः[२] ॥ ५२ ॥ विषयान् भुंक्ष्व किं ब्रह्म विद्ययेति चेत्तत्राह । एतावताऽलं[१] पूर्यताम् । परित्यक्तः पर आत्मा यया तस्याः मम ॥ ५३ ॥ स्वकृतमनुशोचंत्याह । इंद्रियार्थेष्विति चतुर्भिः । मे मया परं भावं त्वं ब्रह्मविदिति ॥ ५४ ॥ प्रसंगः कथमभयायास्तु तत्राह । संग इति । अधियाऽज्ञानेन ॥ ५५ ॥ स्वभावतः प्रवृत्तं यस्य कर्म धर्मार्थं न कल्पते धर्माभिमुखं न भवेत् । तत्रापि निष्कामधर्मद्वारा विरागाय न कल्पते । तद्द्वारा च तीर्थपदस्य हरेः सेवार्थं न पर्यवस्येदित्यर्थः ॥ ५६ ॥

१ विषयप्रसंगेन वृथागतेन कालेनेत्यर्थः । २ तस्मिन्सति ऋणापाकरणं मम शोकापनोदश्च भवेदिति भावः ।

न मुमुक्षेय मोक्तुमिच्छां न कृतवत्यस्मि ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां कपिलोपाख्याने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥



चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः ॥ प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥ १ ॥ शालिनीं श्लाघ्याम् । शुक्लेनाभिव्याहृतं " सदाहं स्वांशकलया " इत्यादि ॥ १ ॥ इत्थं मा खिदः खेदं मा कार्षीः आत्मानं प्रत्यहं भाग्यहीनेति । अदूराच्छीघ्रम् ॥ २ ॥ दमेनेंद्रियसंयमेन नियमेन स्वधर्मेण तपांसि द्रविण-

साहं भगवतो नूनं वञ्चिता मायया दृढम् ॥ यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात् ॥ ५७ ॥ इति श्रीभा० तृ० कर्दमस्य नवकन्योत्पत्तिवर्णनं नाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ मैत्रेय उवाच ॥ निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ॥ दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥ ऋषिरुवाच ॥ मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते ॥ भगवांस्तेऽक्षरो गर्भमदूरात् संप्रपत्स्यते ॥ २ ॥ धृतव्रतासि भद्रं ते दमेन नियमेन च ॥ तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥ स त्वयाराधितः शुक्लो वितन्वन् मामकं यशः ॥ छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥ ४ ॥ मैत्रेय उवाच ॥ देवहूत्यपि संदेशं गौरवेण प्रजापतेः ॥ सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥ ५ ॥ तस्यां बहुतिथे काले भगवान् मधुसूदनः ॥ कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥ अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ॥ गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥ ७ ॥ पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ॥ प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥ ८ ॥

दानानि च तैः ॥ ३ ॥ हृदयग्रंथिं चिज्जडात्मकमहंकारलक्षणं बंधं छेत्ता छेत्स्यति औदर्यः पुत्रः सन् ब्रह्म भावयत्युपदिशतीति तथा ॥ ४ ॥ श्रद्धाय विश्वस्य ॥ ५ ॥ बहुतिथे बहुतरे कालेऽतिक्रांते सति । कार्दमं कर्दमसंबंधि ॥ ६ ॥ घनाघना इत्येकं पदम् । वर्षंतो मेघाः गायंति स्म नृत्यंति स्म ॥ ७ ॥ अपवर्जिता मुक्ताः ॥ ८ ॥



१ अक्षरो विनाशादिविकारशून्यो भगवानेव तवोद्धारार्थमदूरात् शीघ्रमेव ते गर्भं संप्रपत्स्यते तव पुत्रो भविष्यतीत्यर्थः । २ जज्ञे प्रकाशते स्म यथाऽग्निर्दारुणि दारुतश्चाभिव्यक्तो भवति तथा तस्यामंतर्यामिरूपेण प्रादुर्बभूव एतद्दृष्टान्तेन अवतारेष्वपि हरेर्देहस्य शुक्रसंभवत्वं नेति ज्ञायते । अत एव तस्यामिति सप्तमी चरितार्था । उक्तं च " नावतारेष्वपि हरेर्देहः शुक्रादिसंभवः । तथापि शुक्रसंस्थः सन्मातृदेहं प्रविश्य च ॥ विलाप्य तत्र शुक्रं च केवलं ज्ञानरूपतः । उदेति भगवान्विष्णुः काले लोकं विडंबयन् ॥ " इति ग्रन्थान्तरम् । काले दशमे मासि । ३ मनांसि सज्जनानामिति शेषः ।

परिश्रितं परिवेष्टितम् ॥ ९ ॥ आगत्य किं कृतवांस्तदाह । भगवंतमिति द्वाभ्याम् । तत्त्वानां संख्यानं यस्मिंस्तस्य सांख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय भगवंतं जातं विद्वानजो ब्रह्मा स्वराट् स्वतः सिद्धज्ञानः ॥ १० ॥ तस्य चिकीर्षितं सभाजयन्पूजयन्प्रहृष्यमाणैरसुभिरिंद्रियैरुपलक्षितः कर्दमं चेदमभ्यधादिति द्वयोरन्वयः । चकाराद्देवहूतिं च ॥ ११ ॥ तत्र त्वयेति पंचभिः । कर्दमं प्रत्याह । अपचितिः पूजा कृता यद्यस्मात् निर्व्यलीकतो निष्कपटं सम्यग्गृहीतवान् ॥ १२ ॥ अनुमन्येतेति यदेतावत्येव ॥ १३ ॥ अनेकधा प्रभावैर्वंशैर्बृंहयिष्यंति वर्धयिष्यंति ॥ १४ ॥ ऋषिमुख्येभ्यो मरीच्यादिभ्यः ॥ १५ ॥ पुत्रस्तु

तत् कर्दमाश्रमपदं सरस्वत्या परिश्रितम् ॥ स्वयंभूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९ ॥ भगवन्तं परब्रह्म सत्वेनांशेन शत्रुहन् ॥ तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥ सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम् ॥ प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥ ११ ॥ ब्रह्मोवाच ॥ त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ॥ यन्मे संजगृहे वाक्यं भवान् मानद मानयन् ॥ १२ ॥ एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ॥ बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥ इमा दुहितरः सभ्य तव वत्स सुमध्यमाः ॥ सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यन्त्यनेकधा ॥ १४ ॥ अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि[1] ॥ आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥ वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ॥ भूतानां शेवधिं देहं बिभ्राणं कपिलं[2] मुने ॥ १६ ॥ ज्ञानविज्ञानयोगेन कर्मणामुद्धरन् जटाः ॥ हिरण्यकेशः[3] पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥ एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ॥ अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति ॥ १८ ॥

साक्षादीश्वर इत्याह । वेदाहमिति । शेवधिं निधिं सर्वाभीष्टदम् ॥ १६ ॥ देवहूतिं प्रत्याह । त्रिभिः ज्ञानं शास्त्रोक्तं विज्ञानमपरोक्षं च ते एव योग उपायस्तेन कर्मणां जटा मूलानि वासना उद्धरन्नुत्पाटयिष्यन् पद्ममुद्रायुक्तं पदांबुजं यस्य ॥ १७ ॥ हे मानवि अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं तव हृदयग्रंथिम् ॥ १८ ॥

---

१ यथारुचि स्वरुच्यनुसारेण कन्या देहीति । यद्वा । यथारुचि यथाशोभमित्यर्थः । २ कं पिबति लाति चेति कपिलः । ३ हिरण्यकेशादिलक्षणलक्षितः । " हिरण्यश्मश्रुर्हिरण्यकेशः " इत्यादिश्रुतेः ।

सुसंमतः सुपूजितः सन् गंता प्राप्स्यति ॥ १९ ॥ कुमारैः सहेति शेषः । सहनारदो नारदसहितश्च मरीच्यादीन्विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पंचभिः सहितो हंसो ब्रह्मा ययौ । त्रिधाम तृतीयं धाम स्वर्गस्तस्य परां काष्ठां सत्यलोकम् ॥ २० ॥ शतधृतौ ब्रह्मणि ॥ २१ ॥ २२ ॥ युक्तां योग्याम् । अयच्छददात् ॥ २३ ॥ वितन्यते समृद्धः क्रियते शांत्यधिष्ठात्रीं देवतामित्यर्थः । समलालयत्संतोषितवान् ॥ २४ ॥ निमंत्र्य पृष्ट्वा नंदिं हर्षं प्राप्ताः संतः ॥ २५ ॥ सच



अयं सिद्धगणाधीशः सांख्याचार्यैः सुसंमतः ॥ लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥१९॥ मैत्रेय उवाच ॥ तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः ॥ हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥ २० ॥ गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ॥ यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः ॥ २१ ॥ मरीचये कलां प्रादादनसूयामथात्रये ॥ श्रद्धामङ्गिरसेऽयच्छत् पुलस्त्याय हविर्भुवम्[1] ॥ २२ ॥ पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ॥ ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुन्धतीम् ॥ २३ ॥ अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते[2] ॥ विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत् ॥ २४ ॥ ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम् ॥ प्रातिष्ठन् नन्दिमापन्नाः स्वं स्वमाश्रममण्डलम् ॥ २५ ॥ स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ॥ विविक्त उपसंगम्य प्रणम्य समभाषत ॥ २६॥ अहो पापच्यमानानां निरये स्वैरमङ्गलैः ॥ कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥ बहुजन्मविपक्वेन[3] सम्यग्योगसमाधिना ॥ द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥ स एव भगवानद्य हेलनं न गणय्य नः ॥ गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥

मुनिः त्रियुगं विष्णुम् । विविक्ते रहसि ॥ २६ ॥ पापच्यमानानां भृशं दह्यमानानाम् । निरये संसारे स्वीयैरमंगलैः पापैः ॥ २७ ॥ कुतः सर्वा देवताः प्रसन्ना इति ज्ञातमलभ्यलाभादित्याह । द्वाभ्याम् । बहुषु जन्मसु विपक्वेन सुसिद्धेन सम्यग्योगो भक्तियोगस्तस्मिन्समाधिरैकाग्र्यं तेन शून्यागारेषु विविक्तस्थानेषु यस्य तव पदम् ॥ २८ ॥ हेलनमवज्ञां लाघवं न गणय्यागणयित्वा उचितमेव तवैतदित्याह । यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तथा सः ॥ २९ ॥



१ हविर्भुवं हविर्भूसंज्ञिकाम् । २ यङन्तात्कर्तरि लटः शानच् । ३ "बहुजन्मविपाकेन" इति पाठेऽपि स एवार्थः ।

एतत्प्रपंचयति । द्वाभ्याम् । स्वयमेवावतीर्णोऽसि स्ववाक्यं " तव पुत्रो भविष्यामि " इति यत्तत्सत्यं कर्तुं ज्ञानं ज्ञानसाधनं सांख्यं च चिकीर्षुः सन् ॥ ३० ॥ यानि तवालौकिकानि चतुर्भुजादिरूपाणि तान्येव तेऽभिरूपाणि योग्यानि यानि च स्वजनानां रोचंते मनुष्यसरूपाणि तान्यपि ते रोचंत इत्यर्थः । अरूपिणः प्राकृतरूपरहितस्य ॥ ३१ ॥ अभिवादार्हं पादपीठं यस्य ऐश्वर्यादिभिः पूर्तं पूर्णम् ॥ ३२ ॥ ऐश्वर्यादिकं विवृण्वन्नाह । परं परमेश्वरम् । तत्र हेतुः । स्वच्छंदाः स्वाधीनाः शक्तयो यस्य ता एवाह । प्रधानं प्रकृतिरूपं पुरुषं तदधिष्ठातारं महांतं महत्तत्त्वरूपं कालं तेषां क्षोभकं त्रिवृतमहंकाररूपं लोकात्मकं तत्पालात्मकं च तदेवं मायया प्रधानादिरूपतामुक्त्वा चिच्छक्त्या निष्प्रपंचतामाह । आत्मानुभूत्या चिच्छक्त्याऽनुगतः स्वस्मिन् लीनः प्रपंचो यस्य तम् । कविं सर्वज्ञम् ।

स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ॥ चिकीर्षुर्भगवान् ज्ञानं भक्तानां मानवर्धनः ॥ ३० ॥ तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ॥ यानि यानि च रोचन्ते स्वजनानामरूपिणः ॥ ३१ ॥ त्वां सूरिभिस्तत्त्वबुभुत्सयाऽद्धा सदाभिवादार्हणपादपीठम्॥ ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया पूर्णमहं प्रपद्ये ॥ ३२ ॥ परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम्॥ आत्मानुभू-त्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३॥ आ स्माभिपृच्छेऽद्य पतिं प्रजानां त्वयाऽवतीर्णार्ण उताप्तकामः ॥ परिव्र-जत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन् विशोकः ॥३४॥ श्रीभगवानुवाच ॥ मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके॥ अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥

प्रधानाद्याविर्भावलयसाक्षिणमित्यर्थः ॥ ३३ ॥ संन्यासानुज्ञां प्रार्थयते । आस्माभिपृच्छे यत्किंचिदभिपृच्छामीत्यर्थः । त्वया पुत्ररूपेणावतीर्णानि निवृत्तानि ऋणानि देवादिरूपाणि यस्य स आप्तकामश्चाहं परिव्रजतां संन्यासिनां पदवीं मार्गमाश्रितः संस्त्वां युंजन् स्मरन्विचरिष्यामि ॥ ३४ ॥ अहं तावज्ज्ञानोपदेशायैव त्वद्गृहेऽवतीर्णः अतस्तव गृहे वसतोऽपि मुक्तिः सुलभैव । यद्यवश्यं गंतव्यमेवेत्याग्रहस्तथापि मामेवानुस्मरन् गच्छेत्याशयेनाह । मयेति षड्भिः । सत्यलौकिके वैदिके लौकिके च कृत्ये स्वोक्तस्य प्रामाण्यमभिदर्शयति । यद्यस्मात्तुभ्यं तव पुत्रो भविष्यामीत्यवोचम् । अथ अत एव तद्दतं

---

१ " तं सूरिभिः " इति बा० बो० पाठः । २ अवबोधो ज्ञानं वीर्यशब्देन चात्र धर्मो ज्ञेयः तेन षडैश्वर्याण्युक्तानि । ३ आप्ततमत्वं द्योतयन्नित्यर्थः । हिशब्देनैतत्सर्वं ज्ञेयं यथोक्तजन्मस्वीकृतेनेति तत्त्वम् । अज्ञानविप्रलंभादिदोषराहित्यमाप्तत्वं तदस्माकं स्वाभाविकमिति आप्ततमोऽहमिति ज्ञेयम् ।

सत्यं यथा भवति तथा मयाऽजनि जन्म स्वीकृतम् ॥ ३५ ॥ दुराशयाल्लिंगान्मुमुक्षूणां मुनीनामात्मदर्शने संमताय तत्त्वानां प्रसंख्यानाय विद्धीत्युत्तरस्यानुषंगः ॥३६॥ नन्वयमात्मज्ञानमार्गः पूर्वसिद्ध एव नेदानीमपूर्ववत्प्रवर्तनीयस्तत्राह । एष इति । अव्यक्तः सूक्ष्मः ॥३७॥ कामं यथेच्छम् । आपृष्टोऽनुज्ञातः । यद्वा । यथा त्वं गंतुं मां पृष्टवांस्तथाऽत्रावस्थातुं मयाऽपि त्वमापृष्ट इत्यर्थः । मयि संन्यस्तेन समर्पितेन कर्मणा । "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।" इति श्रुतेः ॥ ३८ ॥ ततश्च मां परमं परमात्मानमात्मनि स्वस्मिन्नात्मना मनसा अन्वीक्षमाणोऽभयं मोक्षं प्राप्स्यसि ॥ ३९ ॥ मात्रे देवहूत्यै शमनीमुन्मूलनीम् ।

एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ॥ प्रसंख्यानाय तत्वानां संमतायात्मदर्शने ॥ ३६ ॥ एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ॥ तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम्[१] ॥३७॥ गच्छ कामं मयाऽऽपृष्टो मयि संन्यस्तकर्मणा ॥ जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥ ३८ ॥ मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ॥ आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि[२] ॥ ३९ ॥ मात्रे आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ॥ वितरिष्ये यया चासौ भयं चातितरिष्यति ॥ ४० ॥ मैत्रेय उवाच ॥ एवं समुदितस्तेन कपिलेन प्रजापतिः ॥ दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४१ ॥ व्रतं स आस्थितो मौनमात्मैकशरणो[३] मुनिः ॥ निःसङ्गो व्यचरत्क्षोणीमनग्निरनिकेतनः[४] ॥ ४२ ॥ मनो ब्रह्मणि युञ्जानो यत्तत्सदसतः परम् ॥ गुणावभासे विगुण एक-भक्त्याऽनुभाविते॥ ४३ ॥ निरहंकृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ॥ प्रत्यक् प्रशान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४४ ॥

भयं संसारमतिशयेन तरिष्यति परमानंदं प्राप्स्यतीति चकारार्थः ॥ ४० ॥ समुदितः सम्यगुक्तः सन् तं प्रदक्षिणीकृत्य ॥ ४१ ॥ मुनीनामिदं मौनं व्रतमहिंसालक्षणम् ॥ ४२ ॥ सदसतः परं यत्तस्मिन् ब्रह्मणि गुणावभासके निर्गुणे एकभक्त्याऽव्यभिचारिण्या भक्त्याऽनुभावितेऽपरोक्षीकृते ॥ ४३ ॥ अतो देहादिष्वहंकारादिरहितः अत एव निर्द्वंद्वः शीतोष्णाद्यनाकुलः समदृग्भेदाग्राहकः किंतु स्वदृक् स्वमेव पश्यन् प्रत्यक् प्रवणा शांता विक्षेपरहिता

---

१ भृतं धृतम् । २ ऊनचत्वारिंशच्छ्लोकान्तरे श्लोकोऽयं दृश्यते पुस्तकान्तरे " विश्वमेतद्धि शास्त्रेण विज्ञायात्मानमीश्वरम् । मुनिः शान्तनवो वाक्यस्तदा नारूयात्युपप्लवः ॥ " इति । ३ आत्मा हरिः शरणं गृहं रक्षिता च यस्य स आत्मैकशरणः । ४ अग्नीनामात्मसमारोपादनग्निः गृहाद्याश्रमरहित इत्यर्थः ।

वीर्यस्य ॥ ४४ ॥ तदेवंविधकल्पितोपाधिनिवृत्तिमुक्त्वा परमेश्वरपदप्राप्तिमाह । वासुदेव इति त्रिभिः । प्रतीचो जीवस्यात्मनि लब्ध आत्मा चित्तं येन यतो मुक्तं बंधनमज्ञानं यस्य ॥ ४५ ॥ लब्धात्मतामेवाह । आत्मानमिति ॥ ४६ ॥ तदेवं तेन भागवती गतिः प्राप्ता । पाठान्तरे स एव तां गतिं प्राप्त इति ॥ ४७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ पंचविंशे जनन्या तु पृष्टो बंधविमोचनम् ॥ आदावाह परं भक्तिलक्षणं कपिलः सुतः ॥ १ ॥ कपिलेनार्पिता मात्रे गूढभावनियंत्रिता ॥ योगमाणिक्यमंजूषा स्फुटमुद्घाट्यतेऽधुना ॥ २ ॥ उक्तानुवादपूर्वकं कापिलं योगं पृच्छति कपिल इति त्रिभिः । तत्त्वानां संख्याता गणकः सांख्यप्रवर्तक इत्यर्थः । अत एव स्वयं जातः आत्मप्राप्तये आत्मतत्त्वज्ञापनाय ॥ १ ॥ पुंसां मध्ये वर्ष्मणो

वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि॥परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः॥४५॥ आत्मानं सर्वभूतेषु भगवन्तमवस्थितम्॥ अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥ इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ॥ भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥ इति श्रीभा० तृती० कापिलेये कपिलावतारवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ शौनक उवाच ॥ कपिलस्तत्त्वसंख्याता भगवानात्ममायया॥ जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥ न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ॥ विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥ यद्यद्विधत्ते भगवान् स्वच्छन्दात्माऽऽत्ममायया॥ तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥ सूत उवाच ॥ द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ॥ प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥

वृद्धस्योत्तमस्येत्यर्थः। सर्वयोगिनां मध्ये वरिम्णः वरस्य भावो वरिमा भवितृप्रधानोऽयं निर्देशः वरिष्ठस्येत्यर्थः। यद्वा। वरीयस्त्वादित्यर्थः। विश्रुतौ कीर्तौ असव इंद्रियाणि भूर्यलं न तृप्यंति श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य यद्वा । भूरि बहुशः श्रुतो देवो येन तस्यापि मेऽसव इति संबंधः॥ २ ॥ स्वानां पुंसां छंदेनेच्छया आत्मा देहो यस्य स यद्यत्कर्म विधत्ते तानि कर्माणि कीर्तनार्हाण्यनुकीर्तय॥ ३ ॥ यथा त्वं मां प्रचोदयस्येवं प्रचोदितः सन् तथा तत्प्रश्नानुसारेण आन्वीक्षिक्यामात्मविद्यायाम् ॥ ४ ॥

१ अत्र ' राजोवाच ' इति पाठो विजयध्वजसंमतः ।

बिंदुसरे बिंदुसरसि ॥५॥ तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा तम् । " एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः। " इत्यादि धातुर्वचः ॥६॥ असतामिंद्रियाणां तर्षणाद्विषयाभिलाषान्निर्विण्णा श्रांतास्मि येन संभाव्यमानेन पूर्यमाणेन ॥ ७ ॥ पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मे मया लब्धम् । तदनुग्रहाज्जन्मनामंते भाव्ये सति ॥ ८ ॥ तत्प्रपंचयति । स भगवान् भवांश्चक्षूरूप उदितः सूर्यो यथा ॥ ९ ॥ अपाक्रष्टुमपनेतुम् । कोऽसौ संमोहस्तमाह । एतस्मिन्देहादौ त्वयैव

मैत्रेय उवाच ॥ पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ॥ तस्मिन्बिन्दुसरेऽवात्सीद्भगवान्कपिलः किल ॥ ५ ॥ तमासी-[2]नमकर्माणं तत्त्वमार्गाग्रदर्शनम् ॥ स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥ देवहूतिरुवाच ॥ निर्विण्णा नितरां भूमन्नस-दिन्द्रियतर्षणात् ॥ येन संभाव्यमानेन प्रपन्नाऽन्धं तमः प्रभो ॥७॥ तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम् ॥ सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥ य आद्यो भगवान् पुंसामीश्वरो वै भवान्किल ॥ लोकस्य तमसाऽन्धस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥ अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि ॥ योऽवग्रहोऽहंममेतीत्येतस्मिन्योजितस्त्वया ॥ १० ॥ तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ॥ जिज्ञासयाऽहं प्रकृतेः परस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥ मैत्रेय उवाच ॥ इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ॥ धियाऽभिनन्द्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥ १२ ॥ श्रीभगवानुवाच ॥ योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ॥ अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ॥ १३ ॥ तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे ॥ ऋषीणां श्रोतुकामानां योगं[3] सर्वाङ्गनैपुणम् ॥ १४ ॥

योजितो योऽहंममेत्यवग्रह आग्रहः । द्वितीय इति शब्दस्तत्कार्यरागादिग्रहणार्थः ॥ १० ॥ प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं शरणं गता सती नमामीत्यन्वयः । कुठारं छेत्तारम् ॥ ११ ॥ अपवर्गवर्धनं मोक्षे रतिजनकम् । ईषत्स्मितेन शोभितमाननं यस्य ॥ १२ ॥ आध्यात्मिक आत्मनिष्ठः यत्र यस्मिन् ॥ १३ ॥ १४ ॥

---

१ यद्वा अतीतानां जन्मनामन्ते चरमजन्मनि । अवधारणे षष्ठी । वि० । २ आसीनमकर्माणामिति विशेषणद्वयेन सर्वदा निश्चलबुद्धिः सा च स्वतस्तथापि लोकदृष्ट्यापि तथेति सूचयति । आसीनमित्यनेनाकर्मत्वे सिद्धेऽपि पुनस्तद्वचनं कंडूयनादिविधिर्नास्तीति सूचनेन हरेः सच्चिदानन्दाद्यात्मकत्वं विज्ञायते । वि० । स्वसुतमित्यनेनाप्तत्वं तच्च धातुः संस्मरतीत्यनेन पोष्यते ।३"योगमुर्वङ्गनैपुणम्"इति पाठान्तरम्।उरुभिरङ्गैर्यमनियमादिसाधनैर्नैपुणं पाटवगुणोपेतम्।प्रकृतपाठेऽप्ययमेवार्थः ।

तत्र सर्वांगनैपुण्यं चित्तसंयमाधीनामिति दर्शयन्नाह । चेत इति । अस्यात्मनो जीवस्य गुणेषु विषयेषु पुंसि परमेश्वरे वाशब्दस्तुशब्दार्थे ॥ १५ ॥ यथा च चित्तसंयमे पुरुषार्थसिद्धिस्तद्दर्शयति । अहमिति त्रिभिः । मलैर्वीनं विरहितं यदा शुद्धं मनो भवति । मनःशुद्धेर्ज्ञापकमाह । अदुःखमिति ॥ १६ ॥ निरंतरं निर्भेदम् अणिमानं सूक्ष्मम् । अखंडितमपरिच्छिन्नम् ॥ १७ ॥ हतौजसं क्षीणबलाम् ॥ १८ ॥ मनःशुद्धौ च भक्तिरेवांतरंगसाधनमित्याह । नेति॥ १९ ॥ अस्य सर्वस्यापि सत्संगो मूलमित्याह । प्रसंगमिति । अपावृतं निरावरणम् ॥ २० ॥ साधूनां लक्षणमाह । तितिक्षव इति चतुर्भिः । साधवः शास्त्रानुवर्तिनः

चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ॥ गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥ अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ॥ वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥ तदा पुरुषमात्मानं केवलं प्रकृतेः परम् ॥ निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥ १७ ॥ ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना[1] ॥ परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ १८ ॥ न युज्यमानया भक्त्या भगवत्यखिलात्मनि ॥ सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥ प्रसङ्गमजरं[2] पाशमात्मनः कवयो विदुः ॥ स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥ तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ॥ अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥ मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ॥ मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥ मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ॥ तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥ २३ ॥ त एते साधवः साध्वि सर्वसङ्गविवर्जिताः ॥ सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥ सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः ॥ तज्जोषणादाश्वऽपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥

साधु सुशीलं तदेव भूषणं येषाम् ॥ २१ ॥ २२ ॥ एतानुक्तलक्षणान्भक्तान् तापा आध्यात्मिकादयो न तपंति न व्यथयंति कुतः मद्गतं चेतो येषां तान् ॥ २३ ॥ ये तापैर्नाभिभूयंते साधव इत्यर्थः ॥ २४ ॥ सत्संगस्य भक्त्यंगतामुपपादयति । सतामिति । वीर्यस्य सम्यग्विद्वेदनं यासु ता वीर्यसंविदः हृत्कर्णयो रसायनाः सुखदाः तासां जोषणात्सेवनादपवर्गोऽविद्यानिवृत्तिर्वर्त्म यस्मिंस्तस्मिन्हरौ प्रथमं श्रद्धा ततो रतिस्ततो भक्तिरनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः

---

१ आत्मना मनसा । २ प्रसंगम् अतिस्नेहं विषयेष्विति शेषः । आत्मनः पाशं विदुः इत्यन्वयः ।

॥ २५ ॥ ततः किमत आह । भक्त्येति । मम रचना या सृष्ट्यादिलीला तस्या अनुचिंतया या भक्तिस्तया ऐंद्रियात्सुखाज्जातविरागः सन् दृष्टश्रुताद्दैहिकामुष्मिकात् ततो यत्त उद्युक्तः सांश्चित्तस्य ग्रहणे यतिष्यते ऋजुभिर्भक्तिप्रधानतत्वादनायासैः ॥ २६ ॥ तदेवं प्रकृतेर्गुणानामसेवया ज्ञानादिभिश्चायं जीव इहैव देहे मामेवावरुंधे प्राप्नोति ॥ २७ ॥ काचिदिति कास्विदित्यर्थः । उचिता योग्या तत्रापि मम स्त्रियाः कीदृशी गोचरा योग्या । निर्वाणं मोक्षात्मकं तव पदं स्वरूपमन्वाश्नवै अनंतरमेव सर्वात्मना प्राप्स्यामि । अंजसा त्विति पाठे अहं त्विति संबंधः ॥ २८ ॥ भगवद्वाणो यो भगवंतं लक्षीकरोतीत्यर्थः । यतो यस्माद्योगात् ॥ २९ ॥ विजानीहि विशेषेण ज्ञापय सुखमनायासेन ॥ ३० ॥ इत्थं मातुरर्थं प्रयोजनं विदित्वा । जातस्नेहत्वे हेतुः । यत्र यस्यां तन्वा देहे-

भक्त्या पुमाञ्जातविराग ऐन्द्रियाद्दृष्टश्रुतान्मद्रचनाऽनुचिन्तया ॥ चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥ असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ॥ योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥ २७ ॥ देवहूतिरुवाच ॥ काचित्त्वय्यच्युता भक्तिः कीदृशी मम गोचरा ॥ यया पदं ते निर्वाणमञ्जसाऽन्वाश्नवा अहम् ॥ २८ ॥ यो योगो भगवद्वाणो निर्वाणात्मंस्त्वयोदितः ॥ कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥ २९ ॥ तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे[1] ॥ सुखं बुध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥ मैत्रेय उवाच ॥ विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाऽभिजातः ॥ तत्त्वाम्नायं यत्प्रवदन्ति साङ्ख्यं प्रोवाच वै भक्तिवितानयोगम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ ॥ देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ॥ सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२ ॥

नाविर्भूतः तत्त्वान्याम्नायंतेऽनुक्रम्यंते यस्मिन् । किं तत् । यत्सांख्यं प्रवदंति तत्प्रोवाच भक्तिवितानं च योगं च ॥ ३१ ॥ काचित्त्वय्युचिता भक्तिरिति पृष्टामुत्तमां भक्तिं लक्षयति गुणा विषया लिंग्यंते ज्ञायंते यैस्तेषां देवानां द्योतनात्मकानामिंद्रियाणां तदधिष्ठातॄणां वा सत्त्वे सत्त्वमूर्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धेर्मुक्तेरपि गरीयसीत्युत्तरेणान्वयः । कथंभूता । अनिमित्ता निष्कामा स्वाभाविक्ययत्नसिद्धा । तेषामेवंविधवृत्तौ हेतुमाह । गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्राविकं तदेव कर्म येषाम् । अत एवैकमेकरूपमविकृतं मनो यस्य पुंसः शुद्धसत्त्वस्येत्यर्थः ॥ ३२ ॥



१ अहं मंदधीरपि योषापि दुर्बोधमपीति योजना ।

